अजन्हुजानोद्य महापराधं द्विजं हि हृत्तापहरं सरस्ते ।
अतीतरत्कौशिकमद्भुतं त्वत् प्रभावतः किंग्रहनाथ नैतत् ॥ ११

रघुप्रवीरस्य तवार्हमेतत् यदागतस्यैव रिपोर्जिघांसोः ।
विधूय रक्षस्त्वममुष्य दिव्यमदाः पदं किंग्रहनायक त्वम् ॥ १२

पिष्टप्रदीपान् परिकल्प्य ये त्वां हृष्टाभजंतेऽहनि पुष्यदर्शे ।
इष्टप्रदायी वितनोषि तेषां कष्टोपभोग्यान्यपि कांक्षितानि ॥ १३

विकासयन् मानसपङ्कजानि विपश्चितां निश्चलभक्तिभाजाम् ।
प्रादुर्भवन्नासुरकैटभादि तमोरवेस्त्वं मयि सुप्रसीद ॥ १४

प्रद्युम्ननाम्ने तपसां हि धाम्ने कृपाप्रसन्ने त्वयि किंग्रहेश ।
गङ्गाधिकत्वं न किमापतीर्थं हृत्तापहं वा तनयं न वन्ध्या ॥ १५

त्वं सर्वविस्त्वं कमलासहायः त्वमेव वेदांतवचो विचेयः ।
भवन्तमेतं शरणं प्रपन्ना वयं नयस्मात्परमस्ति दैवम् ॥ १६

पुराणपुंभावमहो विगूह्य युवत्वमेवाकलयन्सुरूपम् ।
उपायमस्त्वं किल धर्मसेनसुतांनताङ्गीमिह किंग्रहेश ॥ १७

श्रीभूमिलालितपदंश्रितशेषतल्पं कल्पान्तयोग्यभुवनावनयोगनिद्रम् ।
श्रीशालिहोत्रशिरसाधृतहस्तपद्मं श्रीवीरराघवविभुं श्रयतां मनोमे ॥ १८

वेंकटेशकविना विनिर्मितां किंग्रहाधिपति संस्तुतिं पठन् ।
दिव्यभोगमुपभुज्य मानवो भव्यरूपमवलोकयेत् प्रभोः ॥ १९

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु
किंग्रहेशस्तुतिः संपूर्णा ॥

